॥ श्रीविष्णोर्नामस्तोत्रम् महादेवोक्त नरसिंहपुराणे ॥

श्रीमहादेव उवाच --
विष्णुर्जिष्णुर्विभुर्देवो यज्ञेशो यज्ञपालकः ।
प्रभविष्णुर्ग्रसिष्णुश्च लोकात्मा लोकपालकः ॥ १॥

केशवः केशिहा कल्पः सर्वकारणकारणम् ।
कर्मकृद वामनाधीशो वासुदेवः पुरुष्टुतः ॥ २॥

आदिकर्ता वराहश्च माधवो मधुसूदनः ।
नारायणो नरो हंसो विष्णुसेनो हुताशनः ॥ ३॥

ज्योतिष्मान् द्युतिमान् श्रीमान् आयुष्मान् पुरुषोत्तमः ।
वैकुण्ठः पुण्डरीकाक्षः कृष्णः सूर्यः सुरार्चितः ॥ ४॥

नरसिंहो महाभीमो वज्रदंष्ट्रो नखायुधः ।
आदिदेवो जगत्कर्ता योगेशो गरुडध्वजः ॥ ५॥

गोविन्दो गोपतिर्गोप्ता भूपतिर्भुवनेश्वरः ।
पद्मनाभो हृषीकेशो विभुर्दामोदरो हरिः ॥ ६॥

त्रिविक्रमस्त्रिलोकेशो ब्रह्मेशः प्रीतिवर्धनः ।
वामनो दुष्टदमनो गोविन्दो गोपवल्लभः ॥ ७॥

भक्तिप्रियोऽच्युतः सत्यः सत्यकीर्तिर्ध्रुवः शुचिः ।
कारुण्यः करुणो व्यासः पापहा शान्तिवर्धनः ॥ ८॥

संन्यासी शास्त्रतत्त्वज्ञो मन्दारगिरिकेतनः ।
बदरीनिलयः शान्तस्तपस्वी वैद्युतप्रभः ॥ ९॥

भूतावासो गुहावासः श्रीनिवासः श्रियः पतिः ।
तपोवासो दमो वासः सत्यवासः सनातनः ॥ १०॥

पुरुषः पुष्कलः पुण्यः पुष्कराक्षो महेश्वरः ।
पूर्णः पूर्तिः पुराणज्ञः पुण्यज्ञः पुण्यवर्द्धनः ॥ ११॥

शङ्खी चक्री गदी शार्ङ्गी लाङ्गली मुशली हली ।
किरीटी कुण्डली हारी मेखली कवची ध्वजी ॥ १२॥

जिष्णुर्जेता महावीरः शत्रुघ्नः शत्रुतापनः ।
शान्तः शान्तिकरः शास्ता शङ्करः शंतनुस्तुतः ॥ १३॥

सारथिः सात्त्विकः स्वामी सामवेदप्रियः समः ।
सावनः साहसी सत्त्वः सम्पूर्णांशः समृद्धिमान् ॥ १४॥

स्वर्गदः कामदः श्रीदः कीर्तिदः कीर्तिनाशनः ।
मोक्षदः पुण्डरीकाक्षः क्षीराब्धिकृतकेतनः ॥ १५॥

स्तुतः सुरासुरैरीश प्रेरकः पापनाशनः ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारस्त्वमग्नयः ॥ १६॥

त्वं स्वाहा त्वं स्वधा देव त्वं सुधा पुरुषोत्तम ।
नमो देवादिदेवाय विष्णवे शाश्वताय च ॥ १७॥

अनन्तायाप्रमेयाय नमस्ते गरुडध्वज ।
मार्कण्डेय उवाच
इत्येतैर्नामभिर्दिव्यैः संस्तुतो मधुसूदनः ॥ १८॥
उवाच प्रकटीभूत्वा देवान् सर्वानिदं वचः ।
इति ।

नरसिंहपुराण अध्याय ४० स्तोत्रसंख्या ६१
श्रीनरसिंहपुराणे विष्णोर्नामस्तोत्रं नाम चत्वारिंशोऽध्यायः ॥ ४०॥